# Svarnakarshana Bhairava Stotram



# स्वर्णाकर्षणभैरवस्तोत्रम्

## Document Information

Text title : Svarnakarshana Bhairava Stotram

File name : svarNAkarShaNabhairavastotram.itx

Category : shiva

Location : doc_shiva

Proofread by : Aruna Narayanan narayanan.aruna at gmail.com

Description/comments : From Durlabh Stotrani.

Latest update : December 31, 2019

Send corrections to : sanskrit@cheerful.com



Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanscript**.

December 31, 2019

*sanskritdocuments.org*

# स्वर्णाकर्षणभैरवस्तोत्रम्



ॐ अस्य श्रीस्वर्णाकर्षणभैरवस्तोत्रं मन्त्रस्य ब्रह्मऋषिः
अनुष्टुप् छन्दः श्रीस्वर्णाकर्षणभैरवदेवता
ह्रीं बीजं क्लीं शक्तिः सः कीलकं मम दारिद्र्य नाशार्थे पाठ विनियोगः ।
ऋष्यादिन्यासः
ब्रह्मर्षये नमः शिरसि ।
अनुष्टुप्छन्दसे नमः मुखे ।
स्वर्णाकर्षणभैरवाय नमः हृदि ।
ह्रीं बीजाय नमः गुह्ये ।
क्लीं शक्तये नमः पादयोः ।
सः कीलकाय नमः नाभौ ।
विनियोगाय नमः सर्वाङ्गे ।
ह्रां ह्रीं ह्रूं इति कर षडङ्गन्यासः ॥

अथ ध्यानम् -
पारिजात द्रुम कान्तारे स्थिते माणिक्यमण्डपे
सिंहासन गतं वन्दे भैरवं स्वर्णदायकं
गाङ्गेय पात्रं डमरूं त्रिशूलं वरं करः सन्दधतं त्रिनेत्रं
देव्यायुतं तप्तस्वर्णवर्ण स्वर्णाकर्षणभैरवमाश्रयामि ॥

मन्त्रः -
ॐ ऐं ह्रीं श्रीं ऐं श्रीं आपदुद्धारणाय ह्रां ह्रीं ह्रूं
अजामल वद्धाय लोकेश्वराय स्वर्णाकर्षणभैरवाय
मम दारिद्र्य विद्वेषणाय महाभैरवाय नमः श्रीं ह्रीं ऐम् ।
अथ स्तोत्रम् -
ॐ नमस्ते भैरवाय ब्रह्मविष्णुशिवात्मने ।
नमस्त्रैलोक्य वन्द्याय वरदाय वरात्मने ॥ १॥

रत्नसिंहासनस्थाय दिव्याभरण शोभिने ।
दिव्यमाल्यविभूषाय नमस्ते दिव्यमूर्तये ॥ २॥

नमस्तेऽनेक हस्ताय अनेक शिरसे नमः ।
नमस्तेऽनेक नेत्राय अनेक विभवे नमः ॥ ३॥

नमस्तेऽनेक कण्ठाय अनेकांसाय ते नमः ।
नमस्तेऽनेक पार्श्वाय नमस्ते दिव्य तेजसे ॥ ४॥

अनेकायुध युक्ताय अनेक सुर सेविने ।
अनेक गुण युक्ताय महादेवाय ते नमः ॥ ५॥

नमो दारिद्र्यकालाय महासम्पद्प्रदायिने ।
श्रीभैरवी संयुक्ताय त्रिलोकेशाय ते नमः ॥ ६॥

दिगम्बर नमस्तुभ्यं दिव्याङ्गाय नमो नमः ।
नमोऽस्तु दैत्यकालाय पापकालाय ते नमः ॥ ७॥

सर्वज्ञाय नमस्तुभ्यं नमस्ते दिव्यचक्षुषे ।
अजिताय नमस्तुभ्यं जितमित्राय ते नमः ॥ ८॥

नमस्ते रुद्ररूपाय महावीराय ते नमः ।
नमोऽस्त्वनन्तवीर्याय महाघोराय ते नमः ॥ ९॥

नमस्ते घोरघोराय विश्वघोराय ते नमः ।
नमः उग्राय शान्ताय भक्तानां शान्तिदायिने ॥ १०॥

गुरवे सर्वलोकानां नमः प्रणवरूपिणे ।
नमस्ते वाग्भवाख्याय दीर्घकामाय ते नमः ॥ ११॥

नमस्ते कामराजाय योषितकामाय ते नमः ।
दीर्घमायास्वरूपाय महामायाय ते नमः ॥ १२॥

सृष्टिमायास्वरूपाय निसर्गसमयाय ते ।
सुरलोकसुपूज्याय आपदुद्धारणाय च ॥ १३॥

नमो नमो भैरवाय महादारिद्र्यनाशिने ।
उन्मूलने कर्मठाय अलक्ष्म्याः सर्वदा नमः ॥ १४॥

नमो अजामलवद्धाय नमो लोकेश्वराय ते ।
स्वर्णाकर्षणशीलाय भैरवाय नमो नमः ॥ १५॥

मम दारिद्र्य विद्वेषणाय लक्ष्याय ते नमः ।
नमो लोकत्रयेशाय स्वानन्दं निहिताय ते ॥ १६॥

नमः श्रीबीजरूपाय सर्वकामप्रदायिने ।
नमो महाभैरवाय श्रीभैरव नमो नमः ॥ १७॥

धनाध्यक्ष नमस्तुभ्यं शरण्याय नमो नमः ।
नमः प्रसन्न आदिदेवाय ते नमः ॥ १८॥

नमस्ते मन्त्ररूपाय नमस्ते मन्त्ररूपिणे ।
नमस्ते स्वर्णरूपाय सुवर्णाय नमो नमः ॥ १९॥

नमः सुवर्णवर्णाय महापुण्याय ते नमः ।
नमः शुद्धाय बुद्धाय नमः संसारतारिणे ॥ २०॥

नमो देवाय गुह्याय प्रचलाय नमो नमः ।
नमस्ते बालरूपाय परेषां बलनाशिने ॥ २१॥

नमस्ते स्वर्ण संस्थाय नमो भूतलवासिने ।
नमः पातालवासाय अनाधाराय ते नमः ॥ २२॥

नमो नमस्ते शान्ताय अनन्ताय नमो नमः ।
द्विभुजाय नमस्तुभ्यं भुजत्रयसुशोभिने ॥ २३॥

नमोऽनमादि सिद्धाय स्वर्णहस्ताय ते नमः ।
पूर्णचन्द्रप्रतीकाश वदनाम्भोजशोभिने ॥ २४॥

नमस्तेऽस्तुस्वरूपाय स्वर्णालङ्कारशोभिने ।
नमः स्वर्णाकर्षणाय स्वर्णाभाय नमो नमः ॥ २५॥

नमस्ते स्वर्णकण्ठाय स्वर्णाभाम्बरधारिणे ।
स्वर्णसिंहानस्थाय स्वर्णपादाय ते नमः ॥ २६॥

नमः स्वर्णभपादाय स्वर्णकाञ्चीसुशोभिने ।
नमस्ते स्वर्णजङ्घाय भक्तकामदुधात्मने ॥ २७॥

नमस्ते स्वर्णभक्ताय कल्पवृक्षस्वरूपिणे ।
चिन्तामणिस्वरूपाय नमो ब्रह्मादिसेविने ॥ २८॥

कल्पद्रुमाधः संस्थाय बहुस्वर्णप्रदायिने ।

नमो हेमाकर्षणाय भैरवाय नमो नमः ॥ २९॥

स्तवेनानेन सन्तुष्टो भव लोकेश भैरव ।
पश्य मां करुणादृष्ट्या शरणागतवत्सल ॥ ३०॥

श्री महाभैरवस्येदं स्तोत्रमुक्तं सुदुर्लभम् ।
मन्त्रात्मकं महापुण्यं सर्वैश्वर्यप्रदायकम् ॥ ३१॥

यः पठेन्नित्यमेकाग्रं पातकै स प्रमुच्यते ।
लभते महतीं लक्ष्मीमष्टैश्वर्यमवाप्नुयात् ॥ ३२॥

चिन्तामणिमवाप्नोति धेनु कल्पतरुं ध्रुवम् ।
स्वर्ण राशिमवाप्नोति शीघ्रमेव न संशयः ॥ ३३॥

त्रिसन्ध्यं यः पठेत्स्तोत्रं दशावृत्या नरोत्तमः ।
स्वप्ने श्री भैरवस्तस्य साक्षाद्भूत्वा जगद्गुरुः ॥ ३४॥

स्वर्णराशि ददात्यस्यै तत्क्षणं नात्र संशयः ।
अष्टावृत्या पठेत् यस्तु सन्ध्यायां वा नरोत्तमम् ॥ ३५॥

लभते सकलान् कामान् सप्ताहान्नात्र संशयः ।
सर्वदः यः पठेस्तोत्रं भैरवस्य महात्मनाः ॥ ३६॥

लोकत्रयं वशीकुर्यादचलां लक्ष्मीमवाप्नुयात् ।
नभयं विद्यते क्वापि विषभूतादि सम्भवम् ॥ ३७॥

म्रियते शत्रवस्तस्य अलक्ष्मी नाशमाप्नुयात् ।
अक्षयं लभते सौख्यं सर्वदा मानवोत्तमः ॥ ३८॥

अष्ट पञ्चाद्वर्णाढ्यो मन्त्रराजः प्रकीर्तितः ।
दारिद्र्य दुःखशमनः व स्वर्णाकर्षण कारकः ॥ ३९॥

य एन सञ्चयेद्धीमान् स्तोत्रं वा प्रपठेत् सदा ।
महा भैरव सायुज्यं स अन्तकालेलभेद्‌ ध्रुवम् ॥ ४०॥

इति रुद्रयामलतन्त्रे स्वर्णाकर्षणभैरवस्तोत्रं सम्पूर्णम् ॥

Proofread by Aruna Narayanan narayanan.aruna at gmail.com

